तिरुमलतिरुपतिदेवस्थानम्



# बाल सप्तगिरिः

सचित्रमासपत्रिका

मार्च् २०२०

## सप्तगिरि अनुबंधम्



करारविन्देन पदारविन्दं,
मुखारविन्दे विनिवेशयन्तम्।
वटस्य पत्रस्य पुटे शयानं,
बालं मुकुन्दं मनसा स्मरामि।।

तिरुमलतिरुपतिदेवस्थानम्

सम्पुटिः-०१ सञ्चिका-१

# बालसप्तगिरिः

## सप्तगिरि अनुबंधम्

## मार्च् - २०२०

## विषयसूचिका



मुखचित्रम् - वटपत्रशाई

अन्तिमरक्षापुटः - श्रीवेङ्कटेश्वरः

निरंतरं भगवद्ध्याने रताः भवन्ति आल्वार् पण्डिताः ते इहपर साधनाय भक्तिं विना सन्मार्गः नास्ति इति निरूपितवन्तः। एते भागवतोत्तमाः सदा अस्माकं मार्गदर्शकाः। एतेषां द्वादश आळ्वार् पण्डितानां परिचयाय ‘‘द्वादश सूरयः’’ इति धारावाहिका अस्माभिः स्थापित।

द्वादश सूरयः

# पोय्गै आल्वारः

तेलुगु मूलम् - डा. गुम्मनूरु रमेष्बाबू
संस्कृतानुवादः डा. सि. आदिलक्ष्मीः



दक्षिणभारतदेशे काञ्चीपुरं प्रसिद्ध पुण्यक्षेत्रम्। तत्र अनेकानि आलयानि सन्ति। तेषां तिरुवेक्का एकम्। एतत्क्षेत्रं उत्तरभागें परमपावनी पद्मसरोवरे ‘पोय्गै आल्वार्’ आविर्भूतः। एते तुलामासे श्रवणानक्षत्रे सञ्जाताः। एतेषां बाल्यविषयाः अस्माभिः अल्पमेव जानीमः। श्रीमहाविष्णोः सेनानिः विष्वक्सेनः। एतेषां पञ्चसंस्कारान् पूरयित्वा मूलमन्त्रं उपदेशितवन्तः। पञ्चसंस्काराणि वैष्णवचिह्नानि। जन्मतः वैष्णवोऽपि भवतु ये चिह्नानां द्वारैव श्रीवैष्णवः भविष्यति। आल्वाराः संदर्शनेन भक्त्या सेवितः कीर्तितः

क्षेत्रमेव दिव्यदेशम् भवति। ते १०८ सन्ति। पोय्गै आल्वारः एकदा देशसञ्चारं कुर्वन्तः तिरुक्कोवलूर् गतवन्तः। मृकण्डुमहर्षिणः गृह वेदिकायां विश्रमितः आसन्। तस्मिन्नेवकाले पूदत्ताळ्वारः आगतः। प्रथमाल्वारः तेषां प्रणामं कृतवन्तः। अस्मिन्नैव वेदिकायां 'एकः शयनं कर्तुं शक्यते, उभौ उपवेष्टुं शक्यते' अत्राभ्यन्तरे पेयाल्वारः आगतः। उभौ तस्य प्रणामं कृतवन्तौ। अत्रैव वेदिकायां एकः शयितुं अन्यः उपवेष्टुं त्रयः उत्तिष्ठातुं शक्येतेति पेयाळ्वारमपि आह्वनितवन्तः। सत्कथाप्रसङ्गेण कालातीता जाता। त्रिविक्रमः नारायणः एतान् अनुग्रहीतुमैच्छत्। झंझावातः, वृष्टिः प्रारम्भः जातः। वेदिकोपरि स्थिते सर्वे तत्रैव उत्तिष्ठाः। परन्तु तेषां मध्ये तीव्र घर्षणा (पीडा) आरम्भा जाता। वेदिकायां त्रयाणामतिरिभ्य अन्यस्य प्रवेशः जातेति ते ज्ञाताः। तत्समये तेषां पुरतः एकः ज्योतिः आविष्कृतः। तत् प्रकाशं दृष्ट्वा पोयगै आल्वारः एकं पाशुरं गानं कृतवन्तः। पाशुरमित्युक्ते सङ्गीतयुक्तपद्यमिति सामान्यार्थः। तत्तु तमिलपाशुरम्। पाशुर भावः भूमिः पृथ्वी दीपाधारः दीपस्तम्भः। परितः स्थितः जलमेव घृतम्। दूरे स्थितः सूर्यः दीपः। तत् प्रकाशकारकः चक्रधारिः स्वामिनः चरणानां सूक्तिमालां समर्पयामि इति कथिताः।

एवमेव पूदत्ताळ्वारः पेयाल्वारः महाभागाः पाशुराणि गानं कृतानि। घर्षणा (पीडा) गता। वेदिका वर्धिता। गर्भालयेण परिणामः प्राप्तः। स्वामिः त्रयाणां दृग्गोचरः जातः। अनन्तरं आल्वाराः स्वामिनः रुपलीलाविभवकीर्तनानि गानं कृतानि। अन्तिमे स्वामिनि अन्तर्लीनाः।।



भक्तिसाहित्य प्रपञ्चे कर्णाटकदेशस्य हरिदाससाहित्यं सुप्रसिद्धम्। हरिदाससाहित्यस्य प्रवर्तकाः पुरन्दरदासादयः परमभागवतोत्तमाः।अधुनातनानां बालाकानएतादशपरमभागवतोत्तमानां विषये अवगमनम् अत्यावश्यकम्। अतः 'कर्णाटकदेशे हरिदासवरेण्याः' इति शीर्षकेन हरिदासवरेण्यान् परिचाययितुं लेखाः धारावाहिकरूपेण प्रकाश्यन्ते।

कन्नड हरिदास वरेण्याः

# पुरन्दरदासः

तेलुगु मूलम् - डॉ.कंपल्ले रविचन्द्रन्

संस्कृतानुवादः - कु. मादनूरु समना

दाससाहित्यसम्प्रदायप्रवर्तकस्य श्रीव्यासतीर्थस्य शिष्यः श्रीपुरन्दरदासः। एतेषां जन्मनाम भवति श्रीनिवासः यश्चानन्तरकाले श्रीनिवासनायकः इति शीनप्पनायकेति वा प्रसिद्धिमवाप। तज्जीवने घटिता एका लघ्वी घटना पुरन्दरदासस्य जीवनपद्धतिम् एव पर्यवर्तयत्। सा घटना तस्य जीवने भक्तेः अंकुरम् अजनयत्। यया च घटनया पुरन्दरदासः कर्नाटकसंगीतपितामहः समभवत्।

सप्ताचलाधीशस्य श्रीवेंकटेशस्य परमानुग्रहात् संजातस्य पुत्रस्य श्रीनिवास इति पितरौ नाम अकुरुताम्। प्रीत्या बान्धवाः तं शीनप्प इति आकारयन्ति स्म। श्रेष्ठविद्वद्भिः शास्त्रं संगीतशास्त्रञ्चाध्यापितः अयं बालः शीनप्पः षोडशे वयसि शास्त्रे संगीते च पाण्डित्यं सम्पादितवान्। पितरि दिवङ्गते सर्वोपि रत्नाभरणापणस्य कार्यभारः बालकस्य श्रीनिवासस्योपरि अपतत्। पितुः व्यवहारं वर्धयन् दशगुणितं लाभम् अलभत् शीनप्पः। तेन अयं शीनप्पः लोके 'नवकोटिनारायण' इति नाम्ना अपि प्रसिद्धः अभवत्। परं धनसम्पादने लुब्धम् एनं जनाः "कृपणः" इति निन्दन्ति स्म। धनार्जने लुब्धस्य अस्य दानधर्मादिविषये कदापि मनः न अभवत्।

परन्तु भगवान् नारायणः "एनम् उद्धरामि" इति तस्य अवगुणान् परिमार्ष्टुं सद्गुणान् अधातुं संकल्पमकरोत्। "किमलभ्यं सुप्रसन्ने भगवति श्रीनिकेतने" शीनप्पनायके प्रसन्नः भगवान् नारायणः स्वयं वृद्धब्राह्मणवेशधारी चतुर्मुखञ्च बालकं कृत्वा शीनप्पनायकम् उपागमत्। अयाचयच्च - "बालोऽयम् उपनयनसंस्कारयोग्यः अस्ति। अहं च दरिद्रब्राह्मणः एनम् उपनेतुं इच्छामि। कृपया धनसाहाय्यं करोतु" इति। कृपणः शीनप्पनायकः किमपि दातुं न ऐच्छत्। केवलं "श्वः आगच्छतु" श्वः आगच्छतु" इति प्रतिवदन् न किञ्चित् धनसाहाय्यम् अकरोत्, न वा न ददामि इति अवदत्। वृद्धब्राह्मणः प्रतिदिनम् अटित्वा परिश्रान्तः सन् तस्य भार्यां सरस्वतीम् उपागमत् - "हे मातः! अहं तु दरिद्रब्राह्मणः मम पुत्रोऽयम् उपनयनसंस्कारयोग्ये वयसि वर्तते। भवती



किञ्चिद् धनसाहाय्यं करोति चेत् महत् पुण्यम् अवाप्नोति'' इति अयाचयत्।

वृद्धब्राह्मणस्य वचनं श्रुत्वा, उदारस्वभावा शीनप्पनायकस्य पत्नी सरस्वती, भर्त्रा प्रीत्या उपयनीकृतं स्वर्णमयं स्वकीयं नासिकाभरणम् अदात्। अवदच्च - 'हे ब्राह्मण! एतदाभरणं विक्रीय यद् धनं प्राप्नोति तेन स्वपुत्रस्य उपनयनसंस्कारं निर्वर्तय'' इति। कपटनाटकसूत्रधारी वृद्धब्राह्मणवेशधारी श्रीमन्नारयणः तदाभरणं विक्रेतुं शीनप्पनायकस्य आपणम् एव अगच्छत्। रत्नाभरणविक्रेता शीनप्पनायकस्तु रत्नपरीक्षायाम् अत्यन्तं निष्णातः आसीत्। अतः ब्राह्मणेन प्रदत्तस्य आभरणस्य परीक्षणेन शीनप्पनायकः झटिति ज्ञातवान् यत् तदाभरणं स्वेनैव भार्यायाः कृते उपायनीकृतं न अन्यत् इति। अयं च ब्राह्मणः दृष्टपूर्वः। कथम् इदम् आभारणम् अनेन प्राप्तम् इति अचिन्तयत्। ततः किञ्चिदालोच्य तं ब्राह्मणं तत्रैव कञ्चित्कालं प्रतीक्षां कर्तुम् अवदत्। ततश्च तदाभरणं पेटिकायां संस्थाप्य त्वरया गृहं प्रत्यागमत्। स्वभार्यायाः नासिकायाम् आभरणम् अदृष्ट्वा ताम् अपृच्छत् - ''कुत्राऽस्ति ते नासिकाभरणम्'' इति। भयभीता भार्या अन्तः कुत्रापि स्थपितम् इति प्रत्यवदत्। ''झटिति तदानये'' ति ताम् आदिशत् शीनप्पनायकः। आभरणमानेतुम् अन्तः प्रविष्टा भार्या अन्यां गतिम् अनवलोक्य विषपाने यदा उद्युक्ता अभवत्। तदा भगवदनुग्रहेण विषपात्रे नासिकाभरणम् अपतत्। आश्चर्यचकिता सा सरस्वती ससम्भ्रमं तदाभरणं स्वभर्त्रे प्रादर्शयत्। तेन कुतूहलयुक्तः तदाभरणं गृहीत्वा शीनप्पनायकः स्वापणं प्रस्थितः। आपणे ब्राह्मणः नासीत्। न दृष्टं च पेटिकायाम् आभरणम्। तेन शीनप्पनायकस्य मनसि महत् परिवर्तनम् अभवत्। कीदृशोऽयं भगवन्महिमा नायं साधरणः वृद्धः। साक्षात् भगवान् एव स्यात् इति अचिन्तयत्। ततः पश्चात्तापेन स्वमनसः सर्वं कालुष्यं परिशोध्य सकलमपि ऐश्वर्यम् अत्यजत्। तदारभ्य परमविरक्तश्च सञ्जातः।

ततश्च सः भगवन्नामसंकीर्तने आसक्तः समभवत्। अथ कदाचित् देशात् देशान्तरम् अटमानः माध्वसम्प्रदाये सुप्रसिद्धान् व्यासतीर्थान् दैवात् सम्प्राप्य, तैः उपदेशम् अवाप। व्यासतीर्थैस्तु तस्मै पुरन्दरविठ्ठलेति नामाङ्केन भगवत्कीर्तनानि संरचितुम् आज्ञा प्रदत्ता। एवं शीनप्पनायकः पुरन्दरविठ्ठलेति नामाङ्केन लक्षाधिकानि भगवत्कीर्तनानि विरच्य पुरन्दरदासेति प्रसिद्धोऽभवत्।



भगवतः कृपाकटाक्षैरनन्तविश्वं परिभ्रमति। भगवतः विशेषाः प्रत्येकस्मिन् मासे हिन्दूदेवताः इति धारावाहिकायां वयं ज्ञास्यामः! छात्राः...

हिन्दू देवताः

# श्रीमत्स्यावतारमूर्तिः

तेलुगुमूलम् - डा. गुम्मनूरु रमेष्बाबु
संस्कृतानुवादः - पि.चन्द्रकान्त् कुमार्



दशावतारेषु श्रीमत्स्यावतारं प्रप्रथमावतारं वर्तते। कल्पान्त समये ब्रह्मदेवः शयनदशायां मुखं उद्घाटितावान्। तन्मुखात् बहिर्पतितं वेदमातरं सोमकनामकराक्षसः नीत्वा पलायितवान् तद्विषयं ब्रह्मदेवः न ज्ञातवान्। परन्तु सर्वव्यापकः श्रीमहाविष्णुः दृष्टवान्। वेदमातरं सोकासुरबन्धनात् रक्षितुं मत्स्यावतारं धृतवान्। 'कृतमाला' नद्यां लघु मत्स्यकारेवतरितवान्।

तत्तु सत्ययुगम्। सत्यव्रतनामकः राजा मेदिनीं परिपालितदिनानि आसन्। एकदा सः राजा कृतमालायां स्नानं कृत्वा सन्ध्यावन्दनकरणसमये तस्याञ्जल्यां लघुमीनाकारेवतरितः श्रीमहाविष्णुः साक्षात्कारः जातः। राजा! 'माम् अस्मिन्नद्यां मा त्यज'! तत्र बृहदाकारमत्स्याः सन्ति। ते मामवश्यं श्वादेयुरिति तमत्स्यः सत्यव्रतं प्रार्थितवान्। महदाश्चर्येण

सत्यव्रतः तं जलाशयं स्वकीय कमण्डले स्थापितवान्। अनन्तरदिने त्तजलाशयं कमण्डले पर्याप्तं नासीत्। बृहदाकारे परिवर्तनं प्राप्तम्। राजा वारिचरं कूप्यां त्यक्तवान्। अनन्तरदिने तत् जलचरः पुनः बृहदाकारं प्राप्तवान्। पुनः तत्रापि पर्यान्ता न गता। राजा तं मत्स्यं सरसि नद्यां अन्तिमे समुद्रे त्यक्त्वा महाशया! भवान् कः? किमर्थं मां शोधयति इति पृष्टवान्। तदानीं मत्स्यावतारे स्थितः श्रीमन्नारायणः हसित्वा राजा! भवान् सकलजीवधातवः सप्तर्षयः वासुकिनः सहायं स्वीकृत्य एकस्मिन् नौकायां मदर्थं निरीक्षणं करोतु अहं मत्स्यनारायणरूपे आगत्य भवादृशान् रक्षणं करिष्यामि'। आगामिकालः चाक्षुषमण्वन्तरः। 'त्वमेव मनुः भविष्यसि' इत्युक्तवान्।'

तदानीं सत्यव्रतः महाप्रसादमिति कथयित्वा सप्तर्षीन् आनीय तेषां दैवोपदेशं श्रावयित्वा सकलजीवधातुभिस्सह नौकमारूह्य वासुकिनः सहायं स्वीकृत्य श्रीमन्नारायणागमनार्थं निरीक्षितवान्। सप्तमदिने कल्पान्तः आगतः। श्रीमत्स्यनारायणः स्वकीय वृषणैः वासुकिं धृतवान्। वासुकिः स्वकीय पुच्छेन तां नौकां परिव्यापितवान्। स्वामिनः गमनदिशायां सत्यव्रतः सप्तर्षयः सकलजीवधातवः गच्छन्तः आसन्। सप्तदिनकृतप्रयाणे श्रीमहाविष्णुः सत्यव्रतं, सप्तर्षिण मत्स्यपुराणं श्रावितवान्। सप्तमदिने सः राक्षसः उच्चस्वरेण गजितस्सन् बहिरागतवान्। श्रीमत्स्यावतारमूर्तिः तं वधित्वा वेदमातरं ब्रह्मदेव दत्तवान्। क्रमेण चाक्षुषमन्वन्तरारम्भः जातः। पुनः सृष्टेः प्रारम्भः जातः। अवतारलक्ष्यं परिसमाप्तं गतः। जलमग्नाः वेदाः जलवासि मीनाकाररूपं धृत्वा करुणामूर्तिः रक्षितवान्। एतद् मत्स्यनाथस्यावतार विशेषः वर्तते।






# मृद्धलेषु अधिका प्रीतिः


तेलुगु मूलम्-डि.श्रीनिवासदीक्षितुलु
संस्कृतानुवादम्-डा.गङ्गिशेट्टि लक्ष्मीनारायणः
चित्रम्-'कलारत्न' देवीजी


शेषाचलस्य उत्तरदिशि कुरुवपुरः इति कश्चन ग्रामः वर्तते। तत्र निर्धनी कुम्भकारः भीमः वसति। सः प्रतिदिनं भगवतः श्रीवेङ्कटेश्वरस्य पाकशालायै आवश्यकान् घटान् भक्त्या प्रेषयति। एतत् भीमस्य नित्यकृत्यम्। एकस्मिन् दिने...










तिरुमलगिरि गन्तुम् अशक्तः भीमः स्वामिनः प्रतिमां तुलसीदलानि च मृत्तिकया एव निर्माय भगवन्तं पूजयन् आनन्दम् अनुभवति। तस्य भार्या तमाली तस्मै सर्वथा साहाय्यं कुर्वती अस्ति। अतः भीमः अविरतं घटान् कुर्वन् अस्ति।







तं प्रदेशं परिपालयति, राजा तोण्डमान् चक्रवर्ती। सः आनन्दनिलये भगवतः अनुग्रहार्थं प्रतिदिनं स्वर्णतुलसीदलैः पूजां करोति। एकदा चक्रवर्तिना समर्पितानि स्वर्णतुलसीदलानि अपसार्य मृत्तुलसीदलानि प्रविशन्ति। राजा आश्चार्यचकितो भूत्वा ...







8
स्वामिन्! सः भक्तः कः?
सः कुम्भकारः भीमः। मम परमभक्तः अस्ति!
सपदि तोण्डमान् चक्रवर्तिनः अहङ्कारः निर्गतः। तस्मिन् विवेकः जागरितः... विनयः समागतः।
9
स्वामिन्! तं महाभक्तं मां दर्शयतु?
अवश्यं दर्शयिष्यामि आगच्छतु...


भगवता वेङ्कटेश्वरेण सह तोण्डमान् चक्रवर्ती कुरुवपुरं गतवान्। एतौ दृष्ट्वा भीमः तस्य पत्नी च महानन्दम् अलभताम्।
11
तमालि! मह्यं बुभुक्षा अधिका वर्तते। श्वादितुं किमपि न ददाति?
स्वामिन्! एकं क्षणम्


10
स्वामिन्! नमस्काराः। वयं मृद्-मानवाः... अस्माकं कृते भक्तिः, पूजाः इत्यादयः अज्ञातविषयाः। वयं भवते युक्तं किमपि कर्तुं न प्रभवामः...
हे भीम! तव निर्मलवचांसि मह्यं बहु रोचते। त्वं मम परमभक्तः। भवता समर्प्यमाणानि मृत्तुलसीदलानि एव मह्यं प्रीतिकराणि, तानि प्रतिदिनं आनन्दनिलयं आगच्छन्ति।
सपदि तमाली नूतनघटे तक्रम् आनीय स्वामिने दत्तवती।
12
तक्रं बहु सम्यक् अस्ति। भवतां कृते किम् आवश्यकम् वदन्तु...
भवतां दर्शनम् अभवत्! तदेव अस्माकं कृते अलम्...




दिव्यविमानम् आगत्य दम्पत्योः पुरतः प्रत्यक्षोऽभवत्। भगवन्तं वेङ्कटेशं नमस्कृत्य कुम्भकारः भीमः पत्न्या तमाल्या सह दिव्यविमानम् आरुह्य वैकुण्ठं गतवान




भगवता श्रीवेङ्कटेश्वरेण सह तोण्डमान् चक्रवर्ती आनन्दनिलयं गन्तुं प्रस्थितोऽभवत्।



आगामिपत्रिकायां श्रीवेङ्कटेश्वरस्य अपरं दिव्यलीलाविलासं दृष्ट्वा धन्याः भविष्यामः।

स्वस्तिः

# महात्मनाम् एव आश्रयणं कर्तव्यम्

तेलुगु मूलम् - डॉ.समुद्राल लक्ष्मणय्य
संस्कृतानुवादः - रा.विष्णुचित्तन्



नीचाश्रयो न कर्तव्यः
कर्तव्यो महदाश्रयः।
ईशाश्रयो महानागः
पप्रच्छ गरुडं सुखम्।।

एकः व्यक्तिः स एव सर्वसन्दर्भेषु सर्वं कार्यं कर्तुं नशक्नोति। स एव सर्वान् कष्टान् सुलभतया समापयितुं अपि न

शक्नोति कष्टकालं आगच्छति चेत् तस्यापेक्षया यः उत्तमः भवति तस्य साहाय्यं स्वीकृत्य उपरि आगच्छति। इयमेव लोकस्थितिः। एवं यदा अन्यस्य आश्रयस्य आवश्यकता आपतति तदा उत्तमानाम् आश्रयणं कर्तव्यं न नीचानाम् इति उपरि श्लोकः वदति।

तदेकं पर्वतम्। तस्मिन् पर्वते एकः सर्पः अस्ति। सः सर्पः एकदा तस्मिन् पर्वते भ्रमणं कुर्वन् आसीत्। तदभ्यन्तरे एकः गरुडपक्षीः आकाशे गच्छन् सर्पस्य समीपं आगतवान्।

तस्मिन् समये अन्यः सर्पः स्वस्य गर्तस्यान्तः गच्छति। किन्तु एषः सर्पः तथा न कृतवान्।

तदा स सर्पः गरुडं दृष्ट्वा ''किं भवान् कथं अस्ति इति पृष्टवान्'। तदा गरुडः'' आम् अहं सम्यक् अस्मि'' इति उक्त्वा'' ''भवान् कथं अस्ति'' इति प्रतिप्रश्नं पृष्टवान्। एवं परस्परं पृष्ट्वा द्वौ अपि गतवन्तौ। एतत् कथं जातं इति अस्माकं आश्चर्यं भवति।

एतदेव सत्यम् -

तत् पर्वतं कैलासम्।

सः सर्पः शिवस्य सर्पः।

तस्मिन् दिने विहारार्थं बहिरागत्य गरुडस्य दृष्टौ पतितः। सः शिवस्य सर्पः इति कारणात् गरुडः तं किमपि न कृतवान्।

अतः महात्मनाम् एव आश्रयणं करणीयम् न नीचानाम् इति एषः नीतिश्लोकः बोधयति।





# विशिष्ट बालकः



पि. नागेश्वरः पद्मावती दम्पत्योः पुत्रः हेमवेङ्कटनारायणः। भगवद्गीतायाः श्लोकान् अनायासतया अनर्गलतया आलापं करोति। सः आध्यात्मिक विबुधगणान् आश्चार्यचकितान् करोति। विष्णुसहस्रनाममपि प्रवाहरूपेण अवधानं कृत्वा आनन्दयति। एवं सः अग्रे गच्छन्नस्ति। अस्य बालकस्य प्रतिभायाः बहवः प्रतिभा पुरस्काराः आगताः।

**प्रतिभायाः पुरस्काराः**

२०१२ वडस्वर्त अन्तर्जातीयसंस्थायाः निर्वाहिते उच्चारण (बि) स्पर्धायां प्रथम पुरस्कारः। २०१२ वत्सरे प्रसारभारत्याः आयोजितेषु विष्णुसहस्रनामपारायणेषु भागं गृहीत्वा प्रशंसां प्राप्तवान्। तत्कार्यक्रमं आलेखं कृत्वा प्रसारं कृतवन्तः।

२०१२ वेदविश्वविद्यालये निर्वाहिते भगवद्गीतायाः श्लोकानां स्पर्धेऽपि प्रथमपुरस्कारः प्राप्तवान्।

२०१३ वर्षे संस्कृतभारत्याः निर्वहणे भगवद्गीतायाः कण्ठपाठस्पर्धायां प्रथमपुरस्कारः।

२०१३ वत्सरे श्रीवेङ्कटेश्वरवेदविद्यालयाध्यक्षे निर्वाहिते संस्कृतदिनोत्सवसंरम्भे भगवद्गीतास्पर्धायां द्वितीयपुरस्कारः।

२०१३ वर्षे श्रीकृष्णजन्माष्टम्युत्सव सन्दर्भे इस्कान् मंदिरे आयोजिते चित्रलेखन स्पर्धायां प्रथमपुरस्कारः। 'घण्टशाला' आराधनोत्सवेषु २०१६ वर्षे राजमहेन्द्रपट्टणे स्वकीय अनुपमानप्रतिभां निरूपितवान्।

२०१४ तः २०१८ पर्यन्तम् प्रति संवत्सरं श्रीकृष्ण जन्माष्टमी, गीताजयन्ति सन्दर्भे इस्कान् आयोजित स्पर्धायां प्रथम पुरस्कारः।

७-१२-२०१९ दिनाङ्के हेच्.डि.पी.पी.ति.ति.दे. इस्कान् संयुक्ताध्वर्ये तिरुपतिपट्टणे गीता जयन्त्युत्सवे हेच्.डि.पी.पी. कार्यदर्शिनः द्वारा पुरस्कारं प्राप्तवान्।

७-१२-२०१९ चिन्मयामिषन् मण्डलसंस्थातः राष्ट्रस्थायि पर्यन्तं अर्हतां प्राप्तवान्।



अस्माकं हैन्दवसंस्कृतेः जनन बालकेषु पुराण, इतिहास, काव्यपरिज्ञान संवृद्धये प्रतिमासं प्रश्नोत्तरीं अर्पयामः।

तेलुगु मूलम्
श्रीमती वि.उमाराणी

# क्विज्

संस्कृतानुवादः
डा.एन्. उमादेवी

१. तिरुमलस्य दर्शनात् पूर्वं कं दर्शनीयम्?

अ. वासुदेवः | आ. वामनः
इ. वराह स्वामिनः | ई. वेंकटेश्वरस्वामिनः

२. सती सावित्र्याः पतिः कः?

अ. सत्य व्रतः | आ. सत्यवंतः
इ. सत्य कीर्तिः | ई. सत्यमूर्तिः

३. शकुंतला पालितः पिता कः?

अ. कण्वमहर्षि | आ. मृकंढमहर्षि
इ. भृगुमहर्षि | ई.अत्रिमहर्षि

४.महाभारते पर्वाणि कति

अ. ११ | आ.१२
इ. १८ | ई.२८

५. श्री पद्मावती मातुः आविर्भावक्षेत्रं?

अ. श्रीनिवास मंगापुरम् | आ.अलमेलु मंगापुरम्
इ.नारायणवनम् | ई. नागलापुरम्

६. आंध्रभोजः इति प्रसिद्धः कः?

अ.महाकवि कालिदासः | आ.श्री कृष्णदेवराय
इ. भोजराजः | ई.त्यागराजः

७. श्रीवारि 'मुत्यालहारतिः' केन आरब्धः

अ. अन्नमय्या | आ. पेद्धतिरुमलय्यः
इ. ताळ्ळपाक तिम्मक्क | ई. तरिगोंडवेंगमांब

**समाधानः** (उल्टा मुद्रितम्): १.ई २.आ ३.अ ४.ई ५.आ ६.आ ७.ई





# चित्रलेखनम्

अस्य चित्रपटस्य रञ्जितं कुर्मः वा



उपरि चित्रपटस्य अधो निर्दिष्ट प्रदेशे स्थापयामेव



नित्यात्मुडै युंडि
नित्युडै वेलुगोंदु
सत्यात्मुडै युंडि
सत्यमै तानुंडु
प्रत्यक्षमै युंडि
ब्रह्ममै युंडु
संस्तुत्युडी
तिरुवेंकटाद्रि विभुडु

- अन्नमय्या